७। त प्राकारश्च कारितः ॥ ६९ ॥ गांजीर्ये जलधिर्बलिर्वितरणे पूषा प्रतापे स्मरः सौन्दर्ये पुरुषव्रते रघुपति र्वाचस्पतिर्वा ....
८। ये। लोकेऽस्मिन्नुपमानतामुपगताः सर्वे पुनः सम्प्रति प्राप्तास्तेऽप्युपमेयतां तदधिके श्री वस्तुपाले सति ॥ १ ॥ विद(धति)
९। विदग्धमतयस्तुल्यौ कौटिल्यवस्तुपालौ ये। ते कुर्वते न कस्मात्कूगकूगरयोः समतां ॥ २ ॥ वदनं वस्तुपाल(स्य)
१०। कमलं को न मन्यते। यत् सूर्यालोकने स्मेरं जवति प्रतिवासरं ॥ ३ ॥ श्री वस्तुपाल सम्प्रति परं महति कर्म(कुर्व)
११। ता जवता। निर्वृतिरर्थिजने च प्रत्यर्थिजने च संघटिता ॥ ४ ॥ तस्मै स्वस्ति चिरं चुलुक्यतिलकामात्याय ....
१२। कान्तक्रतुकर्म्मनिर्म्मलमतिः सौवस्तिकः शंसति। राधे येन विना विना च शिविना [.... य ना [....
१३। ल्वासित मम्मटाः स्वसदनं गछंति सन्तः सदा ॥ ५ ॥ महामात्य श्री वस्तुपालस्य प्र(शस्तिरियं) ....



# प्रभास पाटण - गुजरात।

## बावनजिनालय मन्दिर।

### मूर्त्तियों पर।

[ 1789 ]

१। ठ० हीरा देवि पितृ० वीरदेव मातृ सक्तं संघ० पेथरु संघ० कुशुरा संघ० पदमेल महं० वि(कम)सी वयजलदेवि महं० आल्हणसीह महं० महणसीह ठ्यव० लाषण सो० महिपाल मातृ सक्त


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

२। ठ० रत्न ठ० लूणी ॥ ठ० ॥ षीमसीह श्रे० डोकर ठ० धडलसीह ठ० धांध श्रे० आमुल नागल श्रे० नागसूर राजल सा० वस्तुपाल धांधलदेवि ठ० बरदेव ठ० महतू

३। फो० रिणसीह ठ० महणा बड़हरा अरसीह राजपाल श्रे० रतना जा० रामसीह मातृ लक्ष्मी कमरसी दो० लूणा ठ० पाता श्रीयादेवी सूहव ठ० षतसीह ठ० सिरी

४। ठ० सीहा ॥ मातृ० वालिणि ठ० वयरसीह फो० धरणिग धांधलदेवि राजल ॥ बाफई बा० तेजी ठ० तिहुणपाल ठ० लाडि फो० मूणा सुपल प द्वा० सोवल कामलदेवि ठ० लषमीधर।

## चरणचौकी पर।

[ 1790 ] *

१। ॥ ए० ॥ सं० १६एए वर्षे फाल्गुन सित द्वादशी सोमवासरे श्री द्वीप बन्दिर वास्तव्य वृद्धशाखीय उकेश ज्ञातीय सा० सुडुणसी जार्या संपूराई सुत सा० सिवराज नाम्ना श्री कुंकुमरोल पार्श्व बिंबं सपरिकरं कारितं प्रतिष्ठितं च स्वप्रतिष्ठायां। प्रति-

२। ष्ठितं च तपागच्छाधिराज जट्टारक श्री १ए श्री हीरविजय सूरीश्वर पट्टालंकार ज० श्री १ए श्री विजयसेन सूरीश्वरपट्टप्रजाकर जट्टारक प्रजु श्री १ए श्री विजयदेव सूरिजिः। स्वपट्टप्रतिष्ठिताचार्य श्री ५ श्री विजयसिंह सूरिजिः साथा(?)स्वशिष्योपाध्याय श्री ५ श्री लावण्यगणिप्रमुखपरिकरितैः ॥ शुजं जवतु ॥ श्री ॥

[ 1791 ] †

१। सं० १३३० वैशाख सुदि(२) शनौ पल्लीवाल ज्ञातीय ठ० आसाढ़ ठ० आसापल्लाज्यां जा० जाल्ह श्रेयोर्थं

२। श्री मल्लिनाथ बिंबं ठ० आसपालेन कारितं प्रतिष्ठितं श्री पूर्णजद्र सूरिजिः।

[ 1792 ] †

१। ॥ ॐ सं० १३४० ज्येष्ठ वदि १० शुक्रे पल्लीवाल...जा० वीरपाल ज्रा० पूर्णसिंह जा० वंय-

* यह लेख जमीन से निकली हुई मूर्ति के चरणचौकी पर है।

† मल्लिनाथ महादेव के मन्दिर के पास पड़ी हुई खण्डित मूर्तियों पर ये लेख है।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

२। जलदेवि पु० कुमरसिंह केल्हिसिंह ना० ठ०····आत्मश्रेयोर्थं ॥ श्री पार्श्वनाथ बिंबं का-
३। रितं प्रतिष्ठितं श्री कोरंटकीय ····· सूरिन्निः शुन्नं ॥



# खंभात-गुजरात।

## श्री आदीश्वर न्नगवान का मन्दिर।

### शिला लेख

[1793]

१। ॥ ए० ॥ ॐ नमः श्री सर्वज्ञाय ॥ धीराः सत्त्वमुशंति यत्रिन्नुवने ( यन्नेति ) नेति श्रुत साहित्योपनिषन्नि

२। षएणमनसो यत् प्रतिन्नं मन्वते सार्वज्ञं च यदा मनंति मुनयस्तत्किंचिदत्यद्भुतं ज्योतिर्द्योतितवि-

३। श्वरूपं वितनुतां न्नुक्तिं च मुक्तिं च वः ॥ १ ॥ श्री मद्गूर्जरचक्रवर्त्तिनगरप्राप्त प्रतिष्ठोऽजनि प्राग्वाटाह्वयर-

४। म्य वंशविलसन्मुक्तामणिश्चंडपः ॥ यः संप्राप्य समुन्नतां किल दधौ राजप्रसादोल्लसद्दिक्कूलंकष-

५। कीर्त्तिशुभ्रलहरीः श्रीमंतमंतर्जिनं ॥ २ ॥ अजनिरजनिजानिज्योतिरुद्योतकीर्त्तिस्त्रिजगति तनुज-

६। न्मातस्य चएडप्रसादः ॥ नखमणिसख(शार्ङ)सुन्दरः पाणिपद्मः कमकृत न कृतार्थं यस्य कल्पद्रुकल्पः

७। ॥ ३ ॥ पत्नी तस्या जायतात्पायताक्षी मूर्त्तेन्द्र श्रीः पुएयपात्रं जयश्रीः ॥ जज्ञेताभ्याम प्रिमः सूरसंज्ञः पुत्रः श्री

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

८। मान् सोमनामा द्वितीयः ॥ ४ ॥ निर्माप्यादि जिनेन्द्रबिंबमसमं शेषत्रयेविंशति श्री जैनप्रतिमा विराजि-
९। तमसावभ्यर्चितुं वेश्मनि ॥ पूज्यः श्री हरिभद्रसूरिसुगुरोः । पार्श्वात् प्रतिष्ठाप्य च स्वस्यात्मीय कुलस्य चारु-
१०। यमयं श्रेयो निधानं व्यधात् ॥ ५ ॥ असावत् सावाशाराजं तनुजसमं सोमसचिवः प्रियायां सीतायां शुचि च
११। रितनल्यामजनयत् ॥ यशोभिर्यस्यैभिर्ज्जगतिविशदे क्षीरजलधौ निवासैकप्रीतिं मुदस-नजादिं-
१२। दुःदुःप्रतिपदं ॥ ६ ॥ श्री रैवते निर्म्मितसत्यपात्रः केनोपमानस्त्विह सोऽश्वराजः ॥ कलंकशंकामुपमान-
१३। मेव पुण्यात्महो यस्य यशः शशांके ॥ ७ ॥ अनुजोऽस्यापि सुमनुजस्त्रिभुवनपालस्तथा स्वसाकेली
१४। आशा राजस्याजनि जाया च कुमारदेवीति ॥ ८ ॥ तस्याऽभूत्तनयो जयो प्रथमकः श्री मल्लदेवोऽपरश्चं
१५। चचंद्रमरीचिमण्डलमहाः श्री वस्तुपालस्ततः । तेजःपालइति प्रसिद्धमहिमा विश्वेऽत्र तुर्यः स्फुरच्चा-
१६। तुर्यः समजायंतायतमतिः पुत्रोऽश्वराजादसौ ॥ ९ ॥ श्री मल्लदेव पौत्रौ लीलू सुत पुण्यसिंह तनुज-
१७। न्मा ॥ आल्हणदेव्या जातः पृथ्वीसिंहाख्ययाऽस्ति विख्यातः ॥ १० ॥ श्री वस्तुपाल सचिवस्य गेहिनी देहिनीव गृ-
१८। हलक्ष्मीः ॥ विशदतरचित्तवृत्तिः श्री ललितादेवी संज्ञास्ति ॥ ११ ॥ शीतांशुप्रतिवीर पीवर यशा विश्वेऽत्र
१९। पुत्रस्तयो विख्यातः प्रसरद्गुणो विजयते श्री जैत्रसिंहः कृती ॥ लक्ष्मीर्यत्करपंकज प्रणयिनी हीनाश्रयोत्थेन

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

२० । सा प्रायश्चित्तमिवाचरत्यहरहः स्नानेन दानंत्नसा ॥ १२ ॥ अनुपमदेव्यां पत्न्यां श्री तेजःपाल सचिवतिलकस्या ।

२१ । लावण्यसिंह नामा धाम्नांधामायमात्मजो जज्ञे ॥ १३ ॥ नाभूवन्कति नाम संति कतिनो नो वा भविष्यंति के किं-

२२ । तु क्वापि न कापि संघपुरुषः श्री वस्तुपालोपमः ॥ पुण्येषु प्रहरन्नहर्निशामहो सर्वा-भिसाराङ्कुरो येनायं वि-

२३ । जितः कलिर्विदधता तीर्थेशयात्रोत्सवं ॥ १४ ॥ लक्ष्मीधर्माङ्गयागेन स्थेयसीतेन नं-न्वता ॥ पौषधालयमालायं(लेय्यं)

२४ । निर्म्ममेन विनिर्म्ममे ॥ १५ ॥ श्री नागेन्द्रमुनीन्द्रगच्छतरणिर्जज्ञे महेन्द्रप्रभोः पट्टे पूर्वमपूर्ववाड्मयनि-

२५ । धिः श्री शांति सूरिर्गुरुः ॥ आनन्दामरचन्दसूरियुगलं । तस्मादभूत्तत्पदे पूज्य श्री हरिभद्र सूरि गुरवोऽभूवन् भु-

२६ । वो भूषणं ॥ १६ ॥ तत्पदे विजयसेन सूरयस्ते जयंति भुवनैकभूषणं ये तपोज्वलन भूविभूतिभिस्तेजयंति

२७ । निजकीर्त्तिदर्प्पणं ॥ १७ ॥ स्वकुलगुरुर्गणिरेषः पौषधशालामिमाममात्येन्द्रः ॥ पित्रोः पवित्रहृदयः पुण्यार्थं

२८ । कल्पयामास ॥ १८ ॥ वाग्देवतावदनवारिज ( मित्र ) सामद्वैराज्यदानकलितोरुयशः पताकां चक्रे गुरोर्विज-

२९ । यसेन मुनीश्वरस्य शिष्यः प्रशस्तिमुदयप्रभ सूरिरेनां ॥ १९ ॥ सं० १२८१ वर्षे महं श्री वस्तुपालेन कारित पौषध-

३० । शालाख्य धर्म्मस्थानेऽस्मिन् श्रेष्ठि० रावदेव सुत श्रे० मयधर । भा० सोभाउ भा० धारा । व्यव० वेलाउ विकल श्रे० पूना

३१ । सुत वीजावेड़ी उदयपाल । उ आसपाल। भा० आल्हण उ गुणपाल एतैर्गोष्ठिकत्वमं-गीकृतं ॥ एभिर्गोष्ठिकैरस्य धर्म्मस्थानस्य



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

३२। ....स्तम्भतीर्थे – कायस्थवंशेनाक .... उट्टंकितः .... लिपा ..... लिख .... मिहच
ठ० सु० .... सूत्रधार कुमरसिंहेनोत्कीर्णा ॥

शिला लेख—भोंयरे के द्वार पर।

[1794]

१। ॥ ए० ॥ श्री गुरुभ्यो नमः ॥ श्री विक्रम नृपात् संवत् १६६१ वर्षे वैशाख सुदि ७ सोमे श्री

२। स्तंभतीर्थनगर वास्तव्य ॥ ऊकेश ज्ञातीय ॥ आबूहरा गोत्रविभूषण ॥ सौवर्णिक ॥ कलासु-

३। त ॥ सौवर्णिक ॥ वाघा भार्या रजाई ॥ पुत्र ॥ सौवर्णिक वछिआ ॥ भार्या सुहासिणि ॥ पुत्र। सौव-

४। र्णिक ॥ तेजपाल भार्या ॥ तेजलदे नाम्न्या ॥ निजपति सौवर्णिक तेजपाल प्रदत्ताज्ञ-

५। या ॥ प्रभूतद्रव्यव्ययेन सुभूमिगृहश्रीजिनप्रासादः कारितः ॥ कारितं च तत्र मूल-

६। नायकतया स्थापनकृते श्रीविजयचिंतामणि पार्श्वनाथ बिंबं प्रतिष्ठितं च श्रीमत्त-

७। पागच्छाधिराज भट्टारक श्री आणंदविमल सूरि पट्टालंकार ॥ भट्टारक श्री विजयदा-

८। न सूरि तत्पट्टप्रभावक सुविहितसाधुजनध्येय सुगृहितनामधेय ॥ पात ॥

९। साह श्री अकब्बरप्रदत्तजगद्गुरूविरुदधारक भट्टारक श्री हीरविजय सूरि

१०। तत्पट्टोदयशैलसहस्त्रपाद ॥ पातसाह। श्री अकब्बरसभासमक्षविजितवा-

११। दिवृंदसमुद्भूतयशः कर्पूरपूरसुरभीकृतदिग्वधूवदनारविंद भट्टारक श्री विजय-

१२। सेन सूरिभिः ॥ क्रीडायातसुपर्वराशिरुचिरो यावत् सुबर्णाचलो ॥ मेदिन्यां प्र-

१३। हमण्डलं च वियति भ्राजेंदुमुख्यंलशत् ॥ तावत्तत्रगताघ्रसेवितपद श्री पार्श्वना-

१४। थप्रभो ॥ मूर्त्ति श्री कलितोऽयमत्र जयतु श्रीमज्जिनेन्द्रालयः ॥ १ ॥ छः ॥ : ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# पोसिना-भरुअछ।

## शिला लेख

[ 1795 ] *

१। प्राग्वाटवंशे श्रे० ठहड येन श्री जिन-
२। चन्द्र सूरि सदुपदेशेन पादपरा ग्रामे उं-
३। दिरवसहिका चैत्यं श्रीमहावीर प्रतिमा
४। युतं कारितं। तत्पुत्रौ ब्रह्मदेव शरणदे-
५। वौ। ब्रह्मदेवेन सं० १३७५ अत्रैव श्रीने-
६। मि मंदिर रंगमंडपे दाढ़ाधरः कारितः
७। श्रीरत्नप्रभसूरि सदुपदेशेन तदनुज श्रे०
८। शरणदेव भार्या सूहवदेवि तत्पुत्राः श्रे०
९। वीरचंद्र पासड। आंबड रावण। यैः श्री पर-
१०। मानन्द सूरीणामुपदेशेन सप्ततिशततीर्थ का-
११। रितं॥ सं० १३१० वर्षे। वीरचंद्र भार्या सुषमिणि
१२। पुत्र पूना भार्या सोहग पुत्र लूणा झांझण आं-
१३। बड़ पुत्र बीजा खेता। रावण भार्या हीरू पुत्र बो-
१४। डा भार्या कामल पुत्र कडुआ॥ द्वि० जयता भार्या मूं-
१५। ठा पुत्र देवपाल। कुमरपाल। तृ० अरिसिंह भा०
१६। गउरदेवि प्रभृतिकुटुम्बसमन्वितैः श्री परमा-
१७। नन्द सूरिणामुपदेशेन सं० १३२८ श्री वासुपूज्य
१८। देवकुलिका। सं० १३४५ श्री संमेतशिषर-
१९। तीर्थं मुख्यप्रतिष्ठा महातीर्थयात्रां विधाप्या-
२०। त्मजन्म एवं पुण्यपरंपरया सफली कृतः
२१। तदद्यापि पोसिना ग्रामे श्री संघेन पूज्यमान-
२२। मस्ति॥ शुभमस्तु श्री श्रमणसंघप्रसादतः॥



* भरुअछ से ६ मैल दूर पर 'पोसिना' ग्राम में जैन मन्दिर के भैरवजी की मूर्ति के निचे पत्थर पर यह लेख है।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# उना-काठियावाड़।

## जैन मन्दिर–शाहवाला बाग।

### शिला लेख।

[1796] *

१। ॐ स्वस्ति श्री सं० १६५२ वर्षे कार्त्तिक वदि ५ बुधे
२। येषां जगद्गुरूणां संवेगवैराग्यसौभाग्यादिगुणगण-
३। श्रवणात् चमत्कृतैर्महाराजाधिराज पातिसाहि श्री अकब्बराभि-
४। धानैः गूर्जरदेशात् दिल्लीमण्डले सबहुमानमाकार्य धर्म्मोपदेशा-
५। कर्णनपूर्वकं पुस्तककोशसमर्पणं डाबराभिधानमहासरोमत्स्यब-
६। धनिवारणं प्रतिवर्षं षाण्मासिकामारिप्रवर्त्तनं सर्वदा श्री शत्रुंजयतीर्थे मुं-
७। डकाभिधानकरनिवर्त्तनं जीजियाभिधानकरकर्त्तनं निजसकलदेशे दा-
८। णमृतं स्वमोचनं सदैव बूंद(?)ग्रहणनिवारणं सत्यादिधर्म्मकृत्यानि सकल-
९। लोकप्रतीतानि कृतानि प्रवर्त्तं तेषां श्री शत्रुंजये सकलदेशसंघयुतकृत-
१०। यात्राणां भाद्रपदशुक्लैकादशीदिने जातनिर्वाणं शरीरसंस्कारस्थानासन्न-
११। फलितसहकाराणां श्री हीरविजय सूरीश्वराणां प्रतिदिनं दिव्यनाथनाद-
१२। श्रवण दीपदर्शनादिकैर्जाग्रत्स्वभावाः स्तूपसहिताः पादुकाः कारिताः पं०
१३। मेघेन भार्या लाडकी प्रमुखकुटुम्बयुतेन प्रतिष्ठिताश्च तपागच्छाधिराजैः भ-
१४। ट्टारक श्री विजयसेन सूरिभिः उ० श्री विमलहर्षगणि उ० श्री कल्याण-
१५। विजय गणि उ० श्री सोमविजय गणिभिः प्रणताभव्यजनैः पूज्यमानाश्चि-
१६। रं नंदंतु ॥ लिखिता प्रशस्तिः पद्मानन्दगणिना। श्री उन्नतनगरे शुभं भवतु ॥



* 'उना' का प्राचीन नाम 'उन्नत नगर' था। यह शिलालेख मन्दिर के ७ देहरी में पश्चिम तर्फ से पहली देहरी का है।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1797]

( १ ) ॥ ऍं० ॥ स्वस्ति श्री प्रणयाश्रयः शिवमयः श्री वर्द्धमानाह्वयस्तीर्थेशश्वरमो बभूव भुव-
( २ ) ने सौभाग्यभोग्यैकभूः । नंदीश प्रथमोपि पंचमगतिः ख्यातः सुधर्म्माग्रणी । जज्ञे पंचमपंचमः शमव-
( ३ ) तां निग्रथं १ गोत्रेग्रणी ॥ १ ॥ श्री कौटिक २ वनवासिक ३ चन्द्र ४ वृहद्गच्छ ५ सत्तपा ६ क्रमतः । तदा
( ४ ) गच्छानां संज्ञाजातास्तपगच्छस्तथाऽभूत् ॥ २ ॥ प्राणभृत्क्षितिपालजालविलसत्कोटीर-हीरस्फुरज्ज्यो-
( ५ ) तिर्जालजलाभिषेकविधिना (जा)तांघ्रिपंकेरुहः ॥ चि(ह्न)पावलिहीरहीरविजयाह्वानः प्रधान प्र-
( ६ ) भुः श्रामण्येकनिकेतनतनुभृताम् कल्याणकल्पद्रुमः ॥ ३ ॥ तदादेशवाक्यैः सुधासारसारै । मुदा
( ७ ) कब्बरः पातिसाहिः प्रबुद्धः । स्वदेशेऽखिले जीवहिंसा न्यवारीदमुंचत्करंचापिशत्रुंजयाद्रेः ॥ ४ ॥
( ८ ) तच्छष्योद्‌पिशीलमौलिमहिमावर्षेसहस्त्रत्विषि । जातः श्रीविजयादिसेनसुगुरुः प्रज्ञालवालारुणः ।
( ९ ) येन श्रीमदकब्बरक्षितिपतिः घर्षद्यनेकद्विजान् ॥ निर्जित्यैव जयश्रिया सह महाश्चक्रे विवाहो
( १० ) नवः ॥ ५ ॥ (त)त्पट्टे (सा)रगजमूर्द्धनि देवराज (सू)रिर्बभूव भगवान् वि(जया(ददे)वः । य(स्या)त्रसत्यवचना-
( ११ ) दनले तपोर्कः साक्षाद्भवौ कुमतकुस्तपसां वि(ना)शी ॥ ६ ॥ सम्यग् निशम्य च यदीय यशःप्रशस्तिमा-
( १२ ) ह्वतद्गुणगणस्य दिदृक्षयैव । सूरेर्महातपइतिप्रथितं विरुदं श्रीपातिसाहिरकरोत्स-सलेमसाहि



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

( १३ ) ॥ ७ ॥ यस्याव्याप्युपदेशपेशलरसङ्गोऽयंजगात्सिंहजी: संबुद्धः सरसोऽर्थिसारविसरे मारीन्यावारीत्ततः ॥

( १४ ) [सं]व्यूढां गुणरागरंगललितैः कीर्त्तिस्त्रिलोकोद्भ्रमश्रांतां स्थानविधानतोऽनुरंमते रिंमिरपिंडिध्वलात् ॥

( १५ ) ॥ ७ ॥ श्री विद्यापुर पाति[साहि]मुचितैर्वाचाप्रपंचैर्यकः । स्वर्जोऽज्यप्रतिमः प्रबोध्य सूरत्तीरारंजतं। मोचयन्

( १६ ) तद्वत श्रीमनुजादिमर्दनपतेः श्री पातिसाहेश्वरः । स्थानेऽस्थापयेद्द्विपातनपरो धर्मं सपद्धंगतः ॥

( १७ ) ॥ ए ॥ एवं विहव्यनगरानवनीतमस्मिन् राजन्य .... । श्रीमज्जिन-

( १८ ) .... र्दता .... चय मूर्त्तिति .... मूर्त्तिः सकलरात्रौध्वजरूपमूर्च्चैः ॥ १० ॥ पूज श्री मालि कुलोपु-

( १९ ) रा जरण .... यो ... नामतिनामा । ... र्म्मना: ॥ ११ ॥ तस्यांगजोगजइन्द्रो पवि-

( २० ) .... श्रीमालि विमलकुलांबुज .... माली । विश्वातिशायियशसा जिनपूर्णचन्द्रः श्री राजवं-

( २१ ) ... तिस ... रि · त प्रतापं ॥ १२ ॥ अथ तेनसंशे किमहाय ... पूर्वस्वद्रव्यस्यसफलीकरणाय श्री विजया-

( २२ ) दि सूरीश्वराः श्री गूर्जरदेशात्सौराष्ट्रके पादानांसस्याः कारिताः श्री सिद्धाद्रिपस्यापिप्रनूर्णांमहामहसां

( २३ ) .... कारिता ॥ ततश्च सं० १७१२ वर्षे आषाढ़ शुद्धैकादशी तिथौ । भट्टारक श्री विजयदेवसूरी-

( २४ ) श्वराणा स्व .... मुषापादुकास्तूपोयं ........ श्रीवासणात्मजेन वाई पातली जन्मना श्रीरायचन्द

( २५ ) नाम्ना कारितः प्रतिष्ठापितश्च सं० १७१३ वर्षे माघमास सितपञ्चमी तिथौ महा महोत्सवेन ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

( २६ ) सूरेः श्री विजयादिदेवसुगुरोः पट्टाब्जसूर्याश्रयः सूरि श्री विजयप्रनाव्यदधत श्रेष्ठा प्रतिष्ठा-

( २७ ) मिमां श्रीमद्वाचकरान् विनीतविजयैः शांत्याह्वयैः पाठकैर्युक्ताश्चारुयशोनराः प्रतिम-

( २८ ) या वाचस्पतेः सन्निनाः ॥ १३ ॥ तथा साधु श्री नेमिदासेन तथा साधु वाघजीकेन त्रिनोप्रमेन का

( २९ ) रितः । कृतश्चायं हरजीनाम्ना शिल्पिना । मुहूर्त्तदातातु अत्र उन्नतपुरवास्तव्य नट्ट-गुसांई

( ३० ) पुत्र नट्ट रणछोड़ नामा ॥ श्रीद्वीपबंदरवास्तव्यसंघजातिव्याजे जीयतां श्रीदेव-विहारना

( ३१ ) गः स्तूपरूपः ॥ श्रीमत् श्रीविजयादिदेवगणभृत्पट्टोदयोसकृतेः । सूरेः श्री विजय-प्रनस्य क-

( ३२ ) रुणादृष्ट्या प्रकृष्टोदयः ॥ विद्रूपमणीकृपादिविजयां तेवासिमेणाह्वयो । लेस्यदेव-विहार ····

( ३३ ) विदिते स्तूपप्रशस्ति श्रिये ॥ १४ ॥ इति प्रशस्ति संपूर्ण ॥ श्रीरस्तु ॥ ७ः ॥ ७ः ॥



# बम्बई ।

## श्री आदिनाथजी का मन्दिर—वालकेश्वर ।

### पञ्चतीर्थी पर ।

[ 1798 ]

सं० १४७७ वर्षे श्री श्रीमाल ज्ञा० पं० राणा ना० रूपादे सुत आसाकेन स्वमातृश्रेयसे आगमगच्छे श्री जयानन्दसूरीनामुपदेशेन श्री पार्श्वनाथ पञ्चतीर्थी कारितं श्री सूरिनिः । शुनं नवतु ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चौविशी पर।

[1799]

सं० १७६४ वर्षे ज्येष्ठ सुदि ५ गुरौ स्तम्भतीर्थ बंदिर वास्तव्य प्राग्वाट ज्ञातीय वृद्ध-शाषीय वे। मेघराज भा० वैजकुंआर सुत सूरमलेन स्वद्रव्येण श्री शांतिनाथ चौविशी पट्ट कारापितं प्रतिष्ठितं तपागच्छे भ० श्री विजयप्रभ सूरि पट्टे संविज्ञपक्षीय भ० श्री ज्ञान-विमलसूरिभिः।

घरदेरासर – गामदेवी, वाचागांधी रोड।

चौविशी पर।

[1800]

संवत १५२५ वर्षे माघ सुदि १३ बुधे मोढ ज्ञातीय ठक्कुर वरसिंह भार्या चांपू सुत ठक्कुर मूलू भार्या कीबाई सुत ठक्कुर मधुरेण भार्या संपूरी प्रमुखकुटुम्बयुतेन स्वश्रेयोर्थं श्री अभिनन्दननाथादि चतुर्विंशतिपट्टः श्री आगमगच्छे श्री जयचन्द्रसूरिपट्टे श्री देवरत्न गुरूपदेशेनकारितः प्रतिष्ठापितश्च॥ श्री स्तम्भतीर्थवास्तव्य॥ शुभं भवतु॥ श्रीः॥



# सिरपुर-सागर (सी. पी.)।

शिला लेख।

[1801]

१। ॐ॥ स्वस्ति श्री सं० १३३४ वर्षे वेशाख सुदि २ बुधदिने श्रीवृद्धगच्छे सा० प्रह्लादन पुत्र सा० रत्नसिंह कारितः श्री शांतिनाथ चैत्ये सा० समधा पुत्र महण भार्या सोहिणी पुत्री कुम-

२। रल श्राविकया पितामह सा० पूना श्रेयसे देवकुलिका कारिता॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# श्री सम्मेत शिखर ।

टोंक पर के चरणों पर ।

[ 1802 ]

॥ श्री ऋषभानन जिन चरण प्रतिष्ठितं श्री जैन श्वेताम्बर संघेन ॥

[ 1803 ]

॥ श्री चंद्रानन् जिन चरण प्रतिष्ठितं श्री जैन श्वेताम्बर संघेन ॥

[ 1804 ]

॥ श्री वारिषेण जिन चरण प्रतिष्ठितं श्री जैन श्वेताम्बर संघेन ॥

[ 1805 ]

॥ श्री वर्द्धमान जिन चरण प्रतिष्ठितं श्री जैन श्वेताम्बर संघेन ॥

[ 1806 ]

( १ ) संवत् १८३१ माघ। शु। १०। चंद्र श्री चंद्रप्र
( २ ) भु जिनेन्द्रस्य चरण पादुका। मलधार पूर्णिमा।
( ३ ) श्री मद्विजयगच्छे। भ। श्री जिन शांति सागर सू।
( ४ ) रिभिः। प्रतिष्ठितं। स्थापितं। श्रेयसेस्तु।
( ५ ) श्री संघेन कारापिता।

[ 1807 ]

( १ ) संवत् १८४९ मिति माघ मासे शुक्ल पक्षे पंचमी तिथौ।
( २ ) बुधवारे श्री पार्श्वनाथ जिनस्य चरण न्यासः श्री संघाग्रहेण।
( ३ ) श्री बृहत् खरतर गच्छीय। जंगम। युग प्रधा
( ४ ) न भट्टारक। श्री जिनचंद्र सूरिभिः प्रतिष्ठितः श्रीरस्तु॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1808]

( १ ) संवत् १९४२ का मि। पोष शुक्ल त्रयोदश्यां वर सोमवारे श्री चतुर्विंशति जिन साधु संख्या पादुकाः श्री पार्श्व जिन गणधर पादुका

( २ ) खरतर गच्छे महो श्री दानसागरजी गणिः तत् शिष्य पं। हित वल्लभ मुनिना प्रतिष्ठितं गुज्जर देशान्तरगत मांडव वास्तव्य........

( ३ ) वीर सोजाग्यवर लक्ष्मीचंदन श्री समेत शिखरि प

( ४ ) रि स्थापितं ॥

१। श्री ऋषभ १०००० साधुसुं अष्टापद उपर २। श्री अजित १००० साधु सुं ३। श्री संभव १००० साधुसुं ४। श्री अभिनंदन १००० साधुसुं ५। श्री सुमति १००० साधुसुं ६। श्री पद्मप्रभ ३०८ साधुसुं ७। श्री सुपार्श्वनाथ ५०० साधुसुं ८। श्री चंद्रप्रभ १००० साधुसुं ९। श्री सुविधि १००० साधुसुं १०। श्री शीतल १००० साधुसुं ११। श्री श्रेयांस १००० साधुसुं १२। वासुपूज्य ६०० साधु चंपापुर १३। श्री विमल ६००० साधुसुं १४। श्री अनंत ७००० साधुसुं १५। श्री धर्म्म १०८ साधुसुं १६। श्री शांति ९०० साधुसुं १७। श्री कुंथु १००० साधुसुं १८। श्री अरि १००० साधुसुं १९। श्री मल्लि ५०० साधुसुं २०। श्री मुनिसुव्रत १००० साधु २१। श्री नमि १००० साधुसुं २२। श्री नेमि ५३६ साधुसुं गिरनार २३। श्री पार्श्व ३३ साधुसुं २४। श्री महावीर एकाकी पावापुरी ॥

[1809]

॥ सं। १९४९ माघ शुक्रवारे श्री समेत शैलस्य पर्वतोपरि जड़ जीवस्य दर्शनार्थ श्रीमत् आदिनाथस्य चरण पादुका स्थापिता राय धनपतिसिंह बाहादूरेण का० प्र० श्री विजयराज सूरि तपागच्छे ॥

[1810]

( १ ) सं। १९२५ फा० कृष्ण ५ बुधवासरे श्री चंपापुरे तीर्थे श्री वासपूज्य जी

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

( २ ) पंच कल्याणक चरण न्यास मकसुदाबाद वास्तव्य डुगरू साः प्रतापसिंह
( ३ ) भार्या महताब कुमर ज्येष्ठ सुत लक्ष्मीपतस्य कनिष्ठ भ्रात धनपत सिंह
( ४ ) कारापितं प्रतिष्ठितं भः श्री जिनहंस सूरिभिः वृहत्खरतरगच्छे ॥

[ 1811 ]

( १ ) ॥ संवत् १९३४ माघ वदि ५ बुधवार श्री नेमनाथ जिन तीन कल्यानक रेवत ··
( २ ) भवता तस्य चरण न्यासः ममत शिखरे स्थापिता मकसूदाबाद अजीमगंज
( ३ ) वास्तव्य डुगड प्रतापसिंह भार्या महताब कुमर सुत लक्ष्मीपत कनिष्ठ भ्राता
( ४ ) धनपत सिंह कारापितं प्रतिष्ठितं श्री पूज्यजी भ. श्री जिनहंस सूरीतः खरतर गच्छे
( ५ ) बृहत् खरतर गच्छे ॥

[ 1812 ]

( १ ) ॥ सं १९३४ श्री फाल्गुण वदि ५ श्री वीर वर्धमानजी का चरण पादुका मकसुदा
( २ ) बाद वाली राय धनपति सिंह डुगडने स्थापित किया था सो उसको छत्री बिजली
( ३ ) उपद्रव सु गिरगइ उसपर सं १९६५ के फाल्गुण सुदी ६ को कच्छ मांडवी वासी
( ४ ) साः जगजीवन वालजी ने जीरण उधार कराइ।

जल मंदिर।

पाषाण की मूर्तियोंपर।

[ 1813 ]

( १ ) ॥ संवत् १८२२ वर्षे वैशाख सुदि १३ गुरौ श्री मगसुदाबाद वास्तव्य सावसुखा गोत्रीय ओसवंस ज्ञाती
( २ ) य वृद्धशाखायाम् ॥ लालचंद सुत सुगालचंदेन श्री मद्गुरुणा उपदेशात् आत्म से श्रेयार्थं च श्री समेत शैल
( ३ ) श्री जैन विहारे श्री सहस्त्र फणा पार्श्व जिन बिंबं कारापितं प्रतिष्ठितं च सुविहितामणीभिः सकल सूरिवरैः ॥ मंगलं ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1814]

( १ ) ॥ सं १८२२ वर्षे वैशाख सुदि १३ गुरौ श्री मगसुदाबाद वास्तव्य सावंसुखा गोत्रीय ओसवंस ज्ञातीय

( २ ) बृद्धशाखायां सा सुगालचंद भार्यया केसरकया आत्म संश्रेयोर्थं श्री समेत गिरौ श्री जैन विहार श्री सं-

( ३ ) भवनाथ बिंबं कारापितं प्रतिष्ठितं च सुविहिताग्रणीभिः । सकल सूरिभिः ॥ इति मंगलं ॥



# मधुवन ।

## जगतसेठजी का मंदिर ।

### मूर्तियों पर ।

[1815]

॥ सं १८२२ वर्षे वैशाख सुदि १३ गुरौ सा सुगालचंदेन श्रीपार्श्व बिंबं कारापितं । प्र॰ सकल सूरिभिः ।

[1816]

( १ ) संवत् १८२२ वर्षे वैशाख सुदि १३ गुरौ मग······ज्ञातीय बृद्ध शाखायां सा रूपचंदजी सुत लखमीचंदजी

( २ ) सुत लालचंदजी माता मद कपूरचंदजी······देत स्वश्रेयोर्थं श्री सम्मेत गिरौ श्रीजन वि

( ३ ) हार श्री पार्श्व जिन बिंब कारापितं······

[1817]

॥ संवत् १८२२ वैशाख सुदि १३ गुरौ श्री खरतर गछ आचार्यीय सा भीमजी सुत सा निहालचंदन पं···कारापितं ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1818]

॥ सं० १८२७ शाके १६९३ । प्रवर्त्तमाने वैसाख सुदि द्वादशी तिथौ । भृगुवारे ओसवाल ज्ञाती वृद्धशाखायां ॥ आदि गोत्रे । सा० रुषभदास तद्भार्या गुलाबकुअर सहितेन श्रेयोर्थं । कायोत्सर्ग्ग मुद्रास्थित सहस्रफणालंकृत श्री पार्श्वनाथ बिंबं कारितं ॥

[1819]

॥ सं० १८२२ [ ? ] वैशाख सु० १३ गुरौ श्री गहिलडा गोत्रीय साह कस्तुरचंद ॥

धरणेन्द्र पद्मावती की मूर्ति पर।

[1820]

॥ संवत् १८२५ माहा सुदि ३ सा। सुगालचंदेन श्री धरणेन्द्र पद्मावत्या कारापिता प्र० तपागच्छे ॥

प्रतापसिंहजी का मंदिर।

शिलालेख।

[1821]

( १ ) ॥ संवत् १८८९ मिति माघ शुक्ल १० दशम्यां तिथौ श्री गो-
( २ ) डी पार्श्वनाथस्य द्विभूमि युक्त चैत्यं । श्री बालूचर वास्त-
( ३ ) व्य दुगड़ गोत्रीय । श्री प्रतापसिंघेन कारित । प्रतिष्ठि-
( ४ ) तं च श्री खरतर गच्छेशाःजं । यु । भ । श्री जिन हर्ष सूरी-
( ५ ) णामुपदेशात् । उ । श्री क्षमाकल्याण गणीनां शिष्येणेति

पाषाण की मूर्तियोंपर।

[1822]

( १ ) ॥ सं० १८८८ माघ सुदि ५ सोमे श्री गवडी पार्श्वनाथ जिन बिं-



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

( २ ) वं कारितं ओसवंशे डुगड गो। प्रतापसिंहेन। प्र। वृ। ज। खरतर ग-
( ३ ) छाधिराज श्री जिनचंद्र सूरि ··।······ स्थितैः।

[ 1823 ]

॥ श्री गोडी पार्श्व जिन बिंबं ॥ ( ॐ ) ॥ संवत् १९३२ बर्षे ज्येष्ठ शुक्ल ११। चंद्रे जीर्णोद्धाररूपा। विजय गछे। भट्टारक श्री पूज्य श्री जिन शांतिसागर सूरिजिः प्रतिष्ठितं स्थापितं च ॥

पाषाण के चरणों पर।

[ 1824 ]

( १ ) संबत् १८८९ मिति माघ शुक्ल १० दशम्यां तिथौ श्री गौडी पार्श्वनाथ चैत्ये बिंशति जिनेश्वराणां चरण न्यासाः श्री बालूचर नगर वास्त
( २ ) व्य डुगड गौत्रीय साह श्री प्रताप सिंघेन कारिताः प्रतिष्ठिताश्च। श्री मद्वृहत्खरतर गछेशाः जंग-
( ३ ) म युग प्रधान भट्टारकाः श्री जिन हर्ष सूरीश्वराणामुपदेशात् उपाध्याय पद शोभिता। श्री क्षमाकल्याण गणीनां शि-
( ४ ) ष्य प्राज्ञ ज्ञानानंदन पं। आनंदविमल पं। सुमति शेखर सहितेनेति। श्रेयार्थं। सम्यक्त्व वृद्धयर्थं च ॥

॥ श्री अजितनाथजी २ ॥ श्री संभवनाथजी ३ ॥ श्री अभिनंदन नाथ जी ४ ॥ श्री सुमति नाथ जी ५ ॥ श्री पद्मप्रभ जी ६ ॥ श्री सुपार्श्वनाथ जी ७ ॥ श्री चंद्रप्रभजी ८ ॥ श्री सुविधिनाथ जी ९ ॥ श्री शीतल नाथ जी १० ॥ श्री श्रेयांस नाथ जी ११ ॥ श्री विमल नाथ जी १३ ॥ श्री अनंत नाथ जी १४ ॥ श्री धर्म नाथ जी १५ ॥ श्री शांति नाथ जी १६ ॥ श्री कुंथुनाथ जी १७ ॥ श्री अरनाथ जी १८ ॥ श्री मल्लिनाथ जी १९ ॥ श्री मुनिसुब्रत नाथ जी २० ॥ श्री नमिनाथ जी २१ ॥ श्री पार्श्वनाथ जी २३ ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पाषाण के चरणों पर।

[1825]

( १ ) ॥ संबत् १९३१ ॥ माघे ॥ शुक्ला ए। चंद्रे। गोतम स्वामी ॥
( २ ) चरण पादुका कारापिता ॥
( ३ ) मुनि गोकल चंद्रेण
( ४ ) भट्टारक श्री जिन शांति सागर सूरिभिः। प्रतिष्ठितं ॥ श्री विजय गच्छे ॥

[1826]

( १ ) ॥ संबत् १९३२ मिति माघ शुक्ल ११ अभिनंदन जिन पादुकामिदं मक्
( २ ) सूदाबाद वास्तव्य ओशवंशीय लुंपक गणेमानाक् डुगड गोत्रीय बाबु
( ३ ) प्रतापसिंहस्य भार्या महताब कुमारिकस्य वृद्ध पुत्र राय बहादुर
( ४ ) लछमीपत सिंघस्य लघु भ्रातृ रा। धनपत सिंघेन करापितं प्रतिष्ठितं सर्व सूरिणा ॥

कानपुरवालों का मंदिर।

शिलालेख।

[1827]

॥ सं १९४३ का वर्षे शाके १८०८ प्रवर्तमाने माघ मासे कृष्ण पक्षे एकादश्यां बुधे श्रेष्ठी श्री सिखरूप मल्ल तादात्मज भंडारी श्री रघुनाथ प्रसाद तद्भार्या श्री वदामो बीबी तया कारितं श्री पार्श्वजिन मंदिरं महोत्सवेन स्थापना कारापिता श्री शिखर गिरि मधुवने बृहद्विजयगच्छे सार्वभौम भट्टारक श्री जं. यु. प्र. श्री पूज्य श्री जिन शांति सागर सूरिभिः प्रतिष्ठितं श्रेयसे। (इसके बाईं ओर एक पंक्ति में) श्री मत्तपागच्छाधिराज भट्टारक श्री १०८ श्री विजयराज सूरि राज्ये शुभं भवतु।

मूर्त्तियों पर।

[1828]

॥ सं० १८५४ वर्षे माघ वदि ५ चंद्रे श्री मत्खरतर पीपल्या गच्छे श्री जिनदेव

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

सूरीश्वर राज्ये ओसवंस वृद्ध शाखायां सा पानाचंद श्री पार्श्वजिन बिंबं ······ येन प्रति ····

[1829]

॥ सं० १९०५ शाके १७६७ वदि ५ भृगौ सीपोर वास्तव्य सा० र (त) न चंद तद्भार्या जीजा बाइ तत्पुत्री बेन नवल स्वश्रेयोर्थं श्री चंद्रप्रभ बिंबं ॥ कारापितं तपागच्छे भट्टारक श्री शांतिसागर सूरिभिः प्रतिष्ठितं ॥

लाला कालीकादासजी का मंदिर।

मूर्तियों पर।

[1830]

॥ १९१० वर्षे शाके १७७५ माघ शुक्ल २ तिथौ श्री सुपार्श्वनाथ जिन बिंबं प्रतिष्ठितं खरतर गच्छे श्री जिनहर्ष सूरीणां पट्ट प्रभावक ······

[1831]

॥ सं० १९१० वर्षे शाके १७७५ माघ शुक्ल द्वितीयायां श्री वासुपूज्य जि बिंबं प्रतिष्ठितं भ। श्री जिन महेन्द्र सूरिभिः कारितं च श्री ·······

[1832]

॥ सं० १९१० वर्षे शाके १७७५ माघ शुक्ल २ तिथौ श्री धर्मनाथ बिंबं प्रतिष्ठितं खरतर गच्छे श्री जिन हर्ष सूरीणां पट्ट प्रभावक ·······

पाषाण की पंचतीर्थी पर।

[1833]

॥ सं० १९३१ बर्षे माघ मासे शुक्ल पक्षे १२ बुधे श्री पंचतीर्थीय जिन बिंबं. वेलुयुतो गोत्रे लाला कालीकादास तद्भार्या चत्री बीबो तया कारितं मलधार पूर्णिमा श्री मद्विजय गच्छे भ। श्री पूज्य श्री शांति सागर सूरिभिः प्रतिष्ठितं ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## चंद्रप्रभुजी का मंदिर

### मूर्त्तियों पर।

[ 1834 ]

॥ सं १८०८ माघ सुदि ५ सोमे श्री चंद्रप्रभ जिन बिंबं कारितं ओसवंसे नवलखा गोत्रे मोटामल पुत्र यश रूपेन प्र। बृहत् खरतर ग। श्री जिनाक्ष सूरि चरणकज चंचरीक श्री जिनचंद्र सूरिभिः ॥

## पाश्वनाथ जी का मंदिर।

### मूर्तियों पर।

[ 1835 ]

॥ सं. १६७६ मिति फालगुण शुक्ल १३ ........

[ 1836 ]

॥ सं. १८७७ वै। शु। १५ श्री पार्श्व बिंबं प्र। श्री जिनहर्ष सूरीणा गोलवछा महता बोजानी मूलचंदेन धर्मचंदेन कारितं कास्यां बृहत् खरतर गणे

[ 1837 ]

॥ सं. १८७७ वै। शु। १५ श्री चंद्रप्रभ बिंबं प्र। श्री जिन हर्ष सूरीणा कारितं....

[ 1838 ]

॥ सं. १८७७। वै। शु। १५ श्री चंद्रप्रभ बिंबं प्र। श्री जिनहर्ष सूरिणा कारितं माल-ष.स चेनसुखज कुंदन लालेन श्री ......

### पट्ट पर।

[ 1839 ]

॥ सं. १८८५ मि। फालगुण सुदि १३ रवौ शिखर गिरौ श्री सिद्धचक्रमिदं प्रतिष्ठितं



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

न । श्री जिनहर्ष सूरिभिः श्री बृहत् खरतर गच्छे कारितं डु० पुरणचंदेन सभार्यया स-पुत्रेण श्रेयोर्थं ।

[ 1840 ]

॥ संवत् १९५४ वैशाख शुक्र पक्ष चतुर्थी चंद्रवासरे अमृत सिद्धि योगे राजनगर निवासि वायचाणा शा ··· जेचंदेन श्री तपागछ सूरीश्वर विजयसिंह सूरीणा ·····

सुव्र स्वामीजी का मंदिर ।

चरणों पर ।

[ 1841 ]

( १ ) सं. १८७५ मि । मार्गशीर्ष ए तिथौ रविवासरे
( २ ) श्रीमच्छ्री जिनदत्त सूरीणां चरणपंकजानि
( ३ ) बृ । ख । जं । यु । प्र । भ । जिनहर्ष । सू । प्रतिष्ठितानि ॥

[ 1842 ]

( १ ) ॥ सं. १८७५ । मिति मार्गशीर्ष शुक्ल ए तिथौ रविवासरे
( २ ) श्री सद्गुरुणां पादो बृहत् खरतर ग
( ३ ) च्छे । जं । यु । प्र । भ । श्री जिनहर्ष सूरिभिः प्रतिष्ठितं ॥ श्री ॥
( ४ ) ॥ दादाजी श्री जिनकुशल सूरिः



CC-0. Jangamwadi Math Collection. Digitized by eGangotri



METAL IMAGE OF SHRI SUMATINATH.
Jain Swetambara Temple—Tirtha Rajgriha.
Dated V. S. 1512 (A.D. 1455)

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# श्री राजगृह।

## गांव मंदिर।

### पंचतीर्थी पर।

[1843]

संवत् १५१२ वर्षे वैशाष सुदि १३ उकेश सा० जादा जार्या जरमादे पुत्र सा० नायक जार्या नायक दे फदेकू पुत्र सा० अदाकेन जा० सोनाई ज्रातृ सा० जोगादि कुटुंबयुतेन श्री सुमति नाथ बिंबं कारितं प्रतिष्ठितं श्री सूरिज्ञिः ॥ वढली वास्तव्यः ॥ श्री ॥

### धातु की मूर्ति पर।

[1844]

सं० १९२० । म । का । कृस २ बुधे डुगड प्रतापसिंह जार्या महताव कंवर श्री संती नाथ जिन बिंवं का० ॥

### सफण मूर्ति पर।

[1845]

संबत् १६२० आषाड वदि २। मित्रवाल वंशी षी (वी) सेरवार गोत्रीय सं० गनपति पु० स० तारात पुत्र हेमराज पार्श्वनाथ बिंबं कारापितं प्रतिष्ठितं खरतर गछे जिनचंड सूरिज्ञिः ॥ शुज्ञमस्तु ॥

### श्याम पाषाण की मूर्ति पर।

[1846]

(१) ॥ संवत् १५०४ वर्षे फागण सुदि ए महतीयाण वंशे व० देवसी पुत्र सं० जेठु बहनी लखाई जार्या बेणी। श्री शांति

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

( २ ) नाथ बिंबं कारितं प्रतिष्ठितं श्री जिनसागर सूरीणां निदेशेन वा० शुभशील गणिभिः

चरण पर ।

[ 1847 ]

॥ ॐ नमः ॥ संवत् १०१९ वर्षे माघमासे शुक्लपक्षे ६ तिथौ श्री चंद्रप्रभ जिनवर चरणकमले शुभे स्थापिते ॥ हुगली वास्तव्य ओसवंशे गांधी गोत्रे बुलाकिदास तत्पुत्र साह माणिक चंदेन षत्रीकुंडे कुंडघाटे जीर्णोद्धार करापितं ॥ १ ॥

वैभार गिरि ।

चौथे मंदिर में ।

चरणों पर ।

[ 1848 ]

( १ ) संवत् १९३० वर्षे शाके १००३ प्रवर्तमाने मासोत्तममासे
( २ ) शुभे ज्येष्ठमासे शुक्लपक्षे द्वादशी गुरूवासरे ··· श्री व्यवहार
( ३ ) गिरि शिखरे श्री जिनचैत्यालये मूलनायक श्री
( ४ ) महावीर जिन चरणन्यासः प्रतिष्ठितं श्री तपागच्छे बृहद्वि
( ५ ) जय थापीतं ( हू ) साह बाहादरसंह प्रताप-
( ६ ) सिंह तत् पुत्र राय लछमीपत धनपतसिंग
( ७ ) बाहाद ( र ) जिरणोद्धार करापितं श्री रस्तु
( ८ ) ॥ प्रथम प्रतिष्ठा संवत १०७४ शा० १७३९ मासो
( ९ ) त्तमासे शुभे ज्येष्टमासे कृष्णपक्षे पं-
( १० ) चम्यां तिथौ सोमवासरे श्री जिनचन्द्र
( ११ ) सूरिजी महाराज का० श्री ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1849]

( १ ) संवत् १९३७ वर्षे शाके १७०३ प्रवर्त्तमाने मासोत्तममासे
( २ ) शुभे ज्येष्टमासे शुक्लपक्षे द्वादश्यां तिथौ गुरूवासरे व्य·
( ३ ) वहार गिरिशिखरे श्री आद देव चरण न्या-
( ४ ) सः प्रतिष्ठितं वृद्धविज [ य ] गणी राय लछमिपत
( ५ ) सिंह धनपतसिंह जीरणोद्धा-
( ६ ) र करापितं श्रीरस्तु

[1850]

( १ ) संवत् १९३७ वर्षे शाके १७०३ प्रवर्त्तमाने
( २ ) मासोत्तममासे ज्येष्टमासे शुक्लपक्षे
( ३ ) द्वादशम्यां गुरुवासरे श्रीव्यवहारगिरि शिखरे
( ४ ) श्री शांतिजिन चरणप्रतिष्टा। प्रथम
( ५ ) श्री जिनहर्ष सूरिभिः वृद्ध विजयं प्रतिष्ठा
( ६ ) राय लछमिपत धनपत बा-
( ७ ) हादर जिरणोद्धार करापितं श्री
( ८ ) रस्तु

[1851]

( १ ) संवत् १९३७ वर्षे शाके १७०३ प्रवर्त्तमाने
( २ ) मासोत्तममासे ज्येष्टमासे
( ३ ) शुक्लपक्षे द्वादशम्यां गुरूवासरे
( ४ ) श्री व्यवहार गिरिशिखरे श्री नेमिजिन
( ५ ) चरणन्यास प्रतिष्ट (ा) वृद्ध विजयगणि राय लछमिपति
( ६ ) धनपत संग जिरणोद्धार करापितं श्रीरस्तु ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1852]

( १ ) संवत् १९३८ वर्षे शाके १८०३ प्रवर्त्तमाने मासोत्तममासे
( २ ) ज्येष्टमासे शुक्लपक्षे द्वादशम्यां तिथौ गुरूवासरे
( ३ ) श्री व्यवहार गिरिशिखरे
( ४ ) श्री पार्श्वनाथ चरणयनसः प्रतिष्ठितं वृद्धविज-
( ५ ) य गणि राय छत्रमिपत सिंह धन-
( ६ ) पत संग जिरणोद्धार करापीतं

७ठे मंदिर में।

चरण पर

[1853]

( १ ) संवत् १९३८ वर्षे ज्येष्ठमासे शुक्लपक्षे
( २ ) द्वादशम्यां तिथि गुरूवासरे आदिनाथ जिन चरण-
( ३ ) न्यास प्रतिष्ठितं वृद्धविजय गणि प्रथ-
( ४ ) म जीरणोद्धार बूलाकिचंद तत् पुत्र माणिक
( ५ ) चंद जिरणोद्धार करावीतं द्रुति-
( ६ ) य जिरणोद्धार राय छत्रमिपति सं-
( ७ ) घ धनपतसंघ करापितं। श्रीरस्तु ८। व्यवहारगिरी

बड़ी मूर्त्ति पर

[1854]

॥ संवत् १५०४ वर्षे फागुण सुदि ए दिने मइतियाण............श्री पार्श्वनाथ बिंबं श्री खरतर गच्छे..............श्री जिनसागरसूरीणां निदेशेन श्री शुभशील गुणिभिः॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## खंडहर।

### पाषाण की मूर्तियों पर

[1855]

॥ ओँ संवत् १५०४ वर्षे फागुण सुदि ९ दिने महतीयाण वंशे जाटड गोत्रे सं० देवराज पुत्र सं० षीमराज पुत्र सं० जिणदासेन श्री महावीर बिंब कारितं प्रतिष्ठितं श्री खरतर गच्छे श्रीजिनचंद्रसूरि पट्टे श्री जिनसागर सूरीणां निदेशेन वाचनाचार्य शुभशील गणिभिः॥

[1856]

( १ ) संवत् १५०४ फागुण सुदि ९ दिने महतीयाण वंशे वार्त्तिदिया (?) गोत्रे ठ० हरिपा
( २ ) लेन भार्या लाडो पु० ठ० हरिसि। श्री पार्श्वनाथ बिंबं कारितं प्रतिष्ठितं। श्री
( ३ ) खरतर गच्छे श्री जिनसागर सूरीणां निदेशेन वाच
( ४ ) नाचार्य शुभशील गणिभिः॥

## सोन भंडार।

[1857] *

निर्वाणलाभाय तपस्वियोग्ये, शुभे गूहेऽर्हत् प्रतिमा प्रतिष्ठे।
आचार्यरत्नं मुनि वैरदेवः, विमुक्तये ऽकारयद्दीर्घतेजः॥

## मणियार मठ।

### चरण पर

[1858] †

सं. १८३७ वर्षे मासे माह सुदी ५ तद्दिने श्रीओसवाल वंशे विराणी गोत्रे केशोदास तस्य मोतुलालकस्य भार्या बीबी सताबो राजगृहे नागस्य शालिभद्रजीकस्य चरण स्थापितः।

---

* देखो—आर्किओलजिकल सर्वे रिपोर्ट्स—१९०५-०६ पृ० ९८
† „ — „ — „ — „ — पृ० १०३

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[242]

'खुस्यालचंदस्य पत्नी' के स्थान में 'खुस्यालचंदस्य पीपाड़ा गोत्रस्य पत्नी' होना चाहिये। यह लेख विपुल गिरि के मंदिर में है।

[244]

'सा श्री हकु—' के स्थान में 'सा। श्री हकुमतराय—' होना चाहिये।

[256]

'देवराज सं० षीमराज' के स्थानमें 'देवराज पुत्र सं० षीमराज' होना चाहिये।

संशोधित पाठ।

[257]

॥ ओँ सं० १५२४ आषाढ सुदि १३ खरतर गणेश श्री जिनचंद्रसूरि विजयराज्ये तदादेशे ....श्री कमलसंयमोपाध्यायैः स्वगुरु श्री जिनचन्द्र सूरि पादुके प्र० का० श्रीमाल वं० जीषू पुत्र ठ० डीतमल श्रावकेण श्री वैभार गिरो मुनि मेरुणा लि० ॥

यह चरण गांव के मंदिरमें है।

[258]

॥ सं० १५२४ आषाढ सुदि १३ श्री जिनचंद्र सूरीणामादेशेन श्री कमलसंयमोपाध्यायैः धनाशालिचन्द्रमूर्त्ति ॥ प्र० का० ठ० डीतमल श्रावकेण।

[268]

"पत्नी महाकुमा–तस्या" के स्थान में "पत्नी महाकुमार्या तस्या" होना चाहिये।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# पटना।

## शहर मंदिर।

### संशोधित पाठ।

[323]

॥ संवत १५४७ वर्षे वैसाष शुदि ३ मुलसंघे भट्टारक जी श्री जिनचन्द्र देवा साह जीव राज पापडिवाल नित्य प्रणमति सर मंडासा श्री राजा सिवसिंघ जी रावल....।

[324]

संवत १५४७ वर्षे वैसाष सुदि ३ मुलसंघे भट्टारक श्री जिनचंद्र देवा सा० जिवराज पापडिवाल सहर मंडासा श्री राजा सिवसघंजी रावल....।

## दिगंबरी मंदिर—घीया तमोली गली, सिटी।

### श्वेत पाषाण की मूर्त्ति पर।

[1859]

॥ सं० १४९९ वर्षे फाल्गुण वदि २ श्री संडेर गच्छे उ० साह केल्हा भार्या कस्तुरी पुत्र श्री देपाल भा० देवल दे पुत्र मोकल सहितेन श्री शीतल बिंबं का० प्र० श्री शांति सूरिभिः॥

## पटना—म्युज़ियम।

### संशोधित पाठ।

[555]

सम्वत्। १८७४। वर्षे शाके १७३९। प्रवर्त्तमाने। शुभ ज्येष्ठमासे कृष्णपक्षे पंचम्यां तिथौ। सोमदिने श्री व्यवहार गिरि शिखरे श्री॥ शांति जिन चरणान्प्रतिष्ठितं च। श्री जिनहर्ष सूरिभिः।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[734]

॥ सं॰ । १९२१ व । सा । १७७५....शुचिः । शु । १० ति । श्री शांति जिन पादन्यासो प्र । खरतर गछ भट्टारक श्री महेन्द्र सूरिभिः का । से । श्री उदेचंद भार्या माहा कुमार्य्य श्रे०॥

---

# बनारस।

## पाषाण की मूर्त्तियों पर।

[1860] *

( १ ) ॐ संवत् १५११ वर्षे ज्येष्ठ सु० ३ गुरौ ( २ ) श्रीमाल वंशे [ ढोर ] गोत्रे व०
( ३ ) सं० उढरव अजीतमल्ल भार्याया ( ४ ) पुत्र.........
( ५ ) श्री सुमति नाथ बिंबं का० ( ६ ) प्रति० श्री जिनचंद्र सूरि...
( ७ ) श्री जिनतिलक सूरिभिः प्रतिष्ठितं ॥

[1861] *

( १ ) ॐ स्वस्ति संवत् १५११ वर्षे ज्येष्ठ सुदि ३ पुष्यनक्षत्रे गुरौ श्रीमालवंशे ढोर गोत्रे सोवनपाल भार्या.....
( २ )...............आदिनाथ.................
( ३ ) खरतर ग० श्री जिनहर्षसूरि संताने श्री जिनतिलक सूरि प्रतिष्ठितं

[1862] *

( १ ) [ नर ] पाल भार्या। महुरी पुत्र ठ० भरतपाल....
( २ ) सं० उड़रव अजितमल्ल....

## श्याम पाषाण की छोटी मूर्त्ति पर।

[1863] *

सं० १३९२ वैसाख वदि......

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

काले पाषाण की टूटी परकर के बांये तर्फ

[1864] *

( १ ) ....ज्येष्ठ सुदि १२ शुक्र वासरे। ब० क्रे....

( २ ) .............। बिंबं कारितं।

[1865] *

( १ ) ॥ ॐ ॥ सं० १५०२ वर्षे माघ वदि ६ दिने श्रीमाल वंशे नांदी गोत्रे सं० नरपाल भार्या मह्व-

( २ ) री कारितं श्रीमहावीर बिंबं। श्री खरतर गच्छे प्रतिष्ठितं श्रीजिनसागर सूरिभिः॥

मूलनायकजी पर।

[1866]

सं० १९१० शाके १७७२ मिती आषाढ कृष्ण २ श्री गौड़ी पार्श्वनाथ जिन बिंबं प्रतिष्ठिता कृता बृहत् खरतर भट्टारक गणेश जङ्गम यु० प्रधान भट्टारक श्री जिनमुक्ति सूरिभिः कारिता च नाहटा गोत्रीय लक्ष्मीचन्द्रात्मज दीपचन्द्रेन स्वश्रेयोर्थं सोम वासरे॥

पाषाण की मूर्त्तियों पर।

[1867]

सं० १९१० शाके १७७२ मिती आषाढ कृष्ण २ सोमे श्रीवर्धमान जिन बिंबं प्रतिष्ठा कृता बृहत् खरतर भट्टारक गणेश जं० यु० प्रधान श्री जिनमुक्ति सूरिभिः कारित च नाहटा गोत्रीय लक्ष्मीचन्द्र पौत्र मनोरथचन्द्र श्रेयोर्थमिति।

[1868]

सं० १९१० शाके १७७२ मिती आषाढ़ कृष्ण २ सोमे श्री ऋषभ देव जिन बिंबं प्रतिष्ठा

* ये मूर्त्तियां हाल में जौनपुर से डेढ कोस पर गोमती के किनारे खेत से मिली हैं। बाबू शिखरचंद जी जौहरी ने लाकर अपने बनारस के मंदिर में रखी हैं।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

कृता बृहत् खरतर भट्टारक गणेश जं० यु० प्रधान श्री जिनमुक्ति सूरिभिः कारिता च नाहटा गोत्रीय लक्ष्मीचन्द्रात्मज फूलचन्द्र श्रेयोर्थमिति ।

धातु की प्रतिमा पर ।

[ 1869 ]

सं० १८९७ फा० सु० ५ श्री पार्श्वनाथ बिंबं प्र० श्री जिनमहेन्द्रसूरिणा कारिता नाहटा लक्ष्मीचन्द्र तत् भार्या लक्ष्मी बीबी विधत्ते ।

[ 1870 ]

सं० १८९७ फा० सु० ५ श्री सुपार्श्व बिंबं प्र० श्री जिनमहेन्द्र सूरिना का० वा० लक्ष्मीचन्द्र पुत्री नानको नाम्ना बुद्धोत्तम श्री कुशलचन्द्र गणयुगदशतो बृहत् खरतर गच्छे ।

[ 1871 ]

सं० १८२० फा० सु० २ बुधे प्रतापसिंहजी भार्या महताब कुंवर कारितं श्री चन्द्रप्रभ श्री सागरचन्द्र गणि प्रतिष्ठितं ।

सिद्धचक्र पर ।

[ 1872 ]

सं० १९१८ आषाढ कृष्ण २ सोमे श्री सिद्धचक्र प्रतिष्ठितं ज० यु० प्र० भ० श्री जिन मुक्ति सूरिभिः कारितं च नाहटा गोत्रीय लक्ष्मीचन्द्रात्मज दीपचन्देन स्वहितार्थं ।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

# देहली।

## लाला हजारीमलजी का घरदेरासर।

### देवी की मूर्त्ति पर।

[ 1873 ] *

( १ ) संवत् ११२५ श्री    ( २ ) पचासरीय (!) गच्छे
( ३ ) श्रीमल्लवादि संताने    ( ४ ) चेल्लकेन विरोव्या कारिता ॥

## चीरेखाने का मंदिर।

### धातु की मूर्त्तियों पर।

[ 1874 ]

सं० ११एए........।

[ 1875 ]

सं० १२३४ आषाढ़ वदि २ सनौ जातृ लीवूंदेव श्रेयोर्थं नागदेवेन प्रतिमा कारिता प्रतिष्ठिता मल्लवादि श्री पूर्णचंद्र सूरिभिः।

[ 1876 ]

सं० १४६१ वर्षे माघ सुदि १० नाहर वंशे सा० षेता पु० सा० तोला भार्या तिहुणश्री पु० हेमा धर्म्मभार्यां पितृव्य श्रेयसे श्री शांतिनाथ बिंबं कारितं प्रति० श्री धर्म्मघोष गच्छे श्री मलयचंद्र सूरिभिः ॥ गिर....ग।

[ 1877 ]

संवत् १७०३ वर्षे ज्येष्ठ सु० ३........।

[ 1878 ]

सं० १७७५.... वदि ७ श्री ऋषभानन........।

---

* यह लेख १३ वीं विद्यादेवी की धातु की मूर्त्ति के पृष्ठ पर खुदा हुवा है। देवी की मूर्त्ति सुखासन में बैठी हुई सर्प-वाहन चार हाथवाली प्राचीन है।



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

चौवीशी पर ।

[ 1879 ]

संवत् १५५३ वर्षे वैशाष सु० ३ बुधे श्री हुंबड ज्ञातीय सा० देवा जा० रामति सु० जेई-आकेन जा० माणिकदे सु० डाहीयानाथ पु० स्वश्रेयसे श्री मुनिसुव्रत स्वामि बिंबं कारितं प्र० श्री बृहत्तपा पक्षे ज० श्री उदयसागर सूरिभिः ॥ गिर...ग ।



# जोधपुर

राजवैद्य ज० श्री उदयचंद्रजी का देरासर ।

पंचतीर्थी पर ।

[ 1880 ]

संवत् १५१६ वै० सु० ५ प्राग्वाट ज्ञातीय व्य० मोषसी टमकू पु० जाणा हरखु पु० पुंजा रणसा० पाहु प० जिनदत्त युतेन श्री संभव बिं० कारितं प्र० श्री तपा रत्नशेखर सूरिभिः ।



# जसोल (मारवाड़) ।

पीछे पाषाण की मूर्ति पर ।

[ 1881 ]

॥ सं० १५३३ वर्षे ज्येष्ठ सु० १०.....श्री महावीर बिंबं.....खरतर श्री जिनचंद्र सूरिभिः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पंचतीर्थियों पर।

[1882]

संवत् १४७६ वैशाष वदि २ श्री उकेशवंशे ढाजहड़ गोत्रे सा० पेता पु० आसधर पु० करमा जा० कूरमादे पु० जारमखेन जा० जरमादे पु० सहणा सादा यु० श्री आदिनाथ बिंबं कारितं आत्मश्रेयसे प्रति० श्री पल्लीवाल गछे श्री यशोदेव सूरि (भिः)।

[1883]

॥ संवत् १५१७ वर्षे माघ वदि ५ दिने श्री उकेश गछे श्री ककुदाचार्य संताने श्री उर-केश ज्ञातौ विंवट गोत्रे सं० दादू पु० सं० श्रीवत्स पु० सुललित जा० ललतादे पु० साहण-केन जा० संसार दे युतेन पितरौ श्रेयसे श्री अजितनाथ बिंबं कारितं प्रतिष्ठितं श्री कक सूरिभिः॥

[1884]

सं० १५१९ माघ सु० शुक्रे प्रा० व्य० मीचत जा० नासल दे पुत्र सूचाकेन जा० चांपू माल्ही पु० मेरा तोलादि युतेन स्वश्रेयसे श्री कुंथुनाथ बिंबं कारितं प्र० तपा श्री लक्ष्मी-सागर सूरिभिः॥



# नाकोड़ा।

श्री शांतिनाथजी का मंदिर।

पीले पाषाण के चरण पर।

[1885]

संवत् १५२५ वर्षे वैशाष वदि ५ दिने श्री वीरमपुरे श्री खरतर गछे श्री कीर्तिरत्न सुरिणां स्वर्गः॥ तत्पादुके संखवालेचा गोत्रे सा। काजल पुत्र सा० त्रिलोकसिंह षेतासिंह जिणदास गजडीदास कुसलाकेन करापितं। सं० १६३१ वर्षे मगसर सुदि २ दिने प्रतिष्ठितं॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

पंचतीर्थियों पर ।

[1886]

सं० १४०५ वैशाष सुदि ३ ऊएस ज्ञातीय बाजहड़ गोत्रे सा० गणधर भार्या बल्हनू पुत्र मोहण जयताकेन पित्रो श्रेयसे श्री आदिनाथः कारितं प्रति० श्री अजयदेव सूरिभिः ।

[1887]

सं० १५१३ वर्षे माघ मासे ऊकेश वंशे सा० बल्हा भा० सूल्ही पुत्र सा० बाहड़ भा० गउरी सुत डूंगर रणधीर सुरजनैः रणधीर श्रेयसे श्री कुंथुनाथ बिंबं कारितं प्रतिष्ठितं श्री यशोदेव सूरिभिः ॥ बाजहड़ गोत्रे ॥

[1888]

ॐ संवत् १५३६ वर्षे श्री कीर्तिरत्न सूरि गुरुभ्यो नमः सा० जेठा पुत्र रोहिनी प्रणमंति॥

—∞✻∞—

## बाड़मेर–मारवाड ।

### पार्श्वनाथजी का मंदिर ।

[1889]

सं० १६६५ वर्षे ऊकेश वंशे सा० ठाकुरसी कु० प्र० क..... प्रमुख श्री संघेन उ० श्री विद्यासागर गणि शिष्येण श्री विद्याशील गणि शिष्य वा० श्री विवेकमेरु गणि शिष्य पं० श्री मुनिशील गणि नित्यं प्रणमति । श्री अंचल गच्छे ।

—— :✻✻✻: ——

## उदयपुर ।

### श्री पार्श्वनाथजी का मंदिर–सेठों की बाड़ी में ।

पचतीर्थियों पर ।

[1890]

॥ सं० १५०६ वर्षे मा० वदि ५ दिने श्री संडर गच्छे ऊप० ज्ञा० सा० आसा पु० सात भा० षेठी पु० षितमा भा० धारू पु० नाषर भा० लाडी पु० पामा स्वश्रेयसे श्री सुविधिनाथ बिंबं का० प्र० श्री यशोभद्र सूरि संताने गच्छेशैः श्री शांति सूरिभिः ॥

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1891]

॥ संवत् १६२८ वर्षे वैशाष सुदि ११ बुधे नारदपुरी वास्तव्य प्राग्वाट ज्ञातीय सा० टीला सुत सा० चूराख्येन भार्या वाई पातु सुत लाधा हीता प्रभृति कुटुंबयुतेन स्वश्रेयसे श्री धर्म्मनाथ बिंबं कारितं प्रतिष्ठितं तपागच्छाधिराज भट्टारक श्री हीरविजय सूरिभिश्चिरं नन्दतात् ॥

श्री ऋषभदेवजी का मंदिर—हाथीपोल।

पंचतीर्थी पर।

[1892]

॥ सं० १३४२ ज्येष्ठ शु० ९ गुरौ गेपुत्रौवाल(?) ज्ञातीय व्यव० पुनाकेन भार्या ..श्रेयसे श्री पद्मप्रभ बिंबं का० प्र० श्री सुमति सूरिभिः ॥

श्री ऋषभदेवजी का मंदिर—कसैरी गली।

पंचतीर्थियों पर।

[1893]

॥ सं० १५०१ वर्षे आषाढ सुदि ५ उपकेश ज्ञातीय....श्री आदिनाथ बिंबं का०....

[1894]

॥ सं० १५३३ वर्षे वैशाष सु० ५ शुक्रे श्रीमाल ज्ञा० व्य० मेला भा० फबकू सुत सुधा-केनपितृमातृभ्रातृ श्रेयोर्थं आत्मश्रेयसे श्री सुमति नाथ बिंबं का० प्र० श्री नागेंद्र गच्छे श्री गुणदेव सूरिभिः ॥ वडेचा सषवाराही ग्रामे वास्तव्य ॥

[1895]

॥ संवत् १५५९ वर्षे आषाढ सुदि ८ दिने डूगड़ गोत्रे भार्या सिरिया पुत्र करमसी भार्या फुल्ला धरमाई पुत्र भीमपाल नरपाल नरपति मातृ श्रेयसे श्री शीतलनाथ बिंबं कारितं प्र० श्री वृहद्गच्छे भ० श्री श्री वछल सूरिभिः ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1896]

॥ सं० १५७२ वर्षे चैत्र वदि ३ बुधे ऊकेश वंशे वईताला गोत्रे सा० तोला भा० डीडो पु० सा० आसाकेन भा० राना दे पु० जीवा द्वितीय भा० अचला दे पुत्र गोल्हा पदमादि परिवार युतेन स्वपुण्यार्थं श्री धर्म्मनाथ बिंबं का० प्र० श्री खरतर गच्छे श्री जिनहर्ष सूरि पट्टे श्री जिनचंद्र सूरिभिः ॥ पं० कुशल....सुप....।

श्री गौतमस्वामी की धातु की मूर्त्ति पर।

[1897]

॥ सं० १६७९ व० का० सु० ३ गुरुवारे...खरताण...श्री गौतमस्वामि बिंबं का०..।

धातु के यंत्र पर।

[1898]

॥ सं० १९१२ वर्षे मिती आसोज सुदि १५ शुक्रे मेदपाट देशे उदयपुर ओशवंशे वृद्धि-शाखायां गोत्र बोल्यां साहाजी श्री एकलिंग दासजी तत्पुत्र साहाजी श्री भगवान दासजी तत्पुत्र कुंवरजी श्री......श्री सिद्धचक्र यंत्र कारापितं भट्टारक श्री आनन्द सागर सूरि कारापितं बृहत्तपा गच्छे।

श्री ऋषभदेवजी का मंदिर—सेठों की हवेली के पास।

मूलनायकजी पर।

[1899]

( १ ) ॥ ओं ॥ स्वस्ति श्री ऋद्धिवृद्धि जयौ। मंगलाभ्युदय श्री ॥ अथ संवत्सरेस्मिन् श्री मन्नृपति विक्रमार्क्क समयातित संवत् १६९९ वर्षे श्री शालिवाहन राज्यात् शाके १५६४

( २ ) ॥ प्रवर्त्तमाने उत्तरगोले माघ मासे शुक्लपक्षे दशम्यां तिथौ गुरुवासरे श्री रामगढ दूर्गे महाराजाधिराज महाराव श्री हठीसिंघ जी विजयराज्ये ऊपकेश वंशे बृद्धि शाखा

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

( ३ ) थां घांघ गोत्रे साह श्री माल्हण तत्भार्या सरूप दे तत्पुत्र संघवि श्री कान्हजि तस्य वृद्धि भार्या दीपां लघु भार्या सूषम दे पुत्र चिरंजिवी पुन्यपाल सहितेन श्री प्रासाद बिं

( ४ ) वं ॥ श्री ऋषभदेव बिंबं स्थापितं प्रतिष्ठितं मलधार गछे भट्टारिक श्री महिमा सागर सूरी तत्पट्टे श्री कल्याणसागर सूरिभिः प्रतिष्ठितं धर्माचार्य विजामति श्री उदय सागर सूरिः । शुभं ।

पंचतीर्थियों पर।

[ 1900 ]

॥ ॐ ॥ सं० १४९९ वर्षे फा० सुदि २ दिने ओसवाल ज्ञातीय सा० जाजण पु० सा० भुदा सुश्रावक भार्या रतनु तत्सुतेन सा० सोमाकेन पुत्र देवदत्त जगमालादि सहितेन श्री कुंथुनाथ बिंबं का० प्रतिष्ठितं खरतर गछे श्री जिनभद्र सूरिभिः ॥ श्री ॥

[ 1901 ]

॥ सं० १४९९ माह सुदि ६ सोमे उ० ज्ञा० गूंदोचा गोत्रे सा० लाषा भा० लाषण दे पु० मेहाकेन भा० मयणल दे पु० षित्रपाल रणपालादि सह भाई षेता भा० षेतल दे निमित्तं सुमतिनाथ का० प्र० चैत्र गछे श्री मुनितिलक सूरि गुणाकर सूरिभिः ॥

[ 1902 ]

॥ संवत् १५२९ बर्षे वै० व० ४ शुक्रे प्रा० ज्ञातीय प० चांपसी भा० पोमादे सु० सांगाकेन भा० दई सुत करण भ्रा० सहसादि कुटुंबयुतेन स्वमातृपितृश्रेयसे कुंथुनाथ बिंबं कारितं प्रतिष्ठितं तपा श्री लक्ष्मीसागर सूरिभिः । झाड़उलि ग्राम वास्तव्यः ॥

चौवीशी पर।

[ 1903 ]

॥ सं० १५११ व० आषा० व० ८ श० उपकेश ज्ञातौ आदित्यनाग गोत्रे धाधू शा० सा०

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

ओसा ज्ञा० ओब श्री पु० सुवर्णपाल भार्या सोमश्री पुत्र सा० लाषा केन भा० अधकू पु० सदरथ सूरचंद्र हरिचंद्र युतेन स्वश्रेयसे श्री कुंथुनाथ बिंबं कारितं उपकेश ग० ककुदाचार्य संताने प्रतिष्ठितं श्री कक्क सूरिभि ॥ श्रीः ॥

प्रतिमा पर।

[1904]

॥ सं० १९१९ रा मिगसर सु० १० उसवाल भागा गोत्रे सा० लिषमीदास जी भार्या अनरुप दे पुत्र नाथजी अनरुप दे जी पंच पर....प्रतिष्ठितं।



# करेडा-मेवाड़।

## श्री पार्श्वनाथजी का मंदिर।

धातु की प्रतिमा पर।

[1905] *

( १ ) ॐ देव धर्म्मोयं सुमति गुरोः मध्यम शाखस्य

( २ ) वसति का० देवसूरि संवतु........

( ३ ) भिः

[1906]

सं० १६०४ व० ज्येष्ठ व०...बा कहानी (?) श्री कुंथुनाथ व जि...दान...सरपत्र खत सोनी सीदकरण

[1907]

॥ संवत् १६१९ वैशाख सुदि ६ श्री आदिनाथ.....श्री विजयदान सूरि प्र० बा०....पुं० ना० सुंदर......।

---

* संवत् के अंकों का स्थान टूट गया है, परन्तु लेख के अन्य अक्षरों से स्पष्ट है कि प्रतिमा बहुत प्राचीन है।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[ 1908 ]

॥ सं० १६२१ व० वैशाख सुदि १२ वो श्री शीतलनाथ बिंबं गुरू श्री विजय सूरिभिः ॥

[ 1909 ]

॥ सं० १६४६ अस० सुदि ६ वाजसा श्री धर्म......

[ 1910 ]

॥ संवत् १७१० वर्षे ज्येष्ठ सित ६ गुरौ श्री सुविधि बिंबं श्रेयोर्थं का० प्र० भ० श्री विजयराज सूरिभिः श्रा० कनका भ० श्री विजय सेन सूरिभिः ॥

पंचतीर्थी पर।

[ 1911 ]

॥ सं० १५०९ वर्षे माघ सुदि ५ शुक्रे प्राग्वाट वंशे सं० कर्मट भा० माजू पु० उधरणेन भार्या सोहिणि पुत्र आल्हा वोसा नीसा सहितेन श्री अंचल गच्छेश श्री जयकेसरि सूरि उपदेशेन स्वश्रेयसे श्री वासुपूज्य स्वामी बिंबं कारितं प्र० श्रीसंघेन ॥

[ 1912 ]

॥ सं० १५१६ वीरम ग्रामे श्रे० वीबा सोनल पुत्र श्रे० जुडसिकेन भा० संपूटी पुत्र धन्ना वाघा भार्या फांफ प्रमुख कुटुंबयुतेन श्री नमिनाथ बिंबं कारितं प्रतिष्ठितं श्री तपागच्छ नायक श्री रत्नशेखर सूरिभिः ॥

[ 1913 ]

॥ संवत् १५२९ वर्षे फागुण सुदि २ शुक्रे श्री श्री (?) वंशे रसोइया गोत्रे श्रे० गुहा भार्या रंगाई पुत्र श्रे० देधर सुश्रावकेण भा० कुंवरि भ्रातृ सीधा युतेन श्री अंचलगच्छेश्वर श्री जयकेसरि सूरीणामुपदेशेन स्वश्रेयोर्थं श्री शांति नाथ बिंबं कारितं प्रतिष्ठितं श्रीसंघेन ॥ श्री पत्तन नगरे ॥



CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1914]

॥ संवत् १५४१ वर्षे वैशाख मासे नागर ज्ञाती श्रे० केल्हा भा० मानूं सुत चांगा भार्याकेन सुत हरखा चांगा बाला सहितेन आत्मश्रेयोर्थं श्री संभवनाथ बिंब का० प्र० बृद्ध तपापक्षे भ० श्री जिनरत्न सूरिभिः ॥

[1915]

॥ संवत् १५०७ वर्षे माघ सुदि ७ गुरौ उपकेश ज्ञा० सा० हापा पु० बिजा भा० बड़-जल दे पु० ठाकुर रीडा ठाकुर भा० अबवा दे पुत्र कुंरपाल युतेन आत्मश्रे० पित्रोः पु० श्री शीतलनाथ बिंबं का० प्र० श्री० वृ० वो० श्री मलयहंस सूरिभिः ॥ कईउलि वास्तव्य ॥

रंगमंडप के बांये तर्फ आले के नीचे का शिलालेख।

[1916]

(१) ॥ ओं ॥ संवत् १३३४ वर्षे वैशाख सुदि ११ शुक्रे श्री आंचल गच्छे। प्राग्वाट ज्ञातीय महं साजण महं तेजा.... सा झांझणेन निज मातृ

(२)......कपूर देवी श्रेयोर्थं रवनक (?) श्री शांतिनाथ बिंबं कारापितं ॥ संताने महं मंडलिक महं माला महं देवसीह महं प्रमत्तसीह.....

सभामंडप में दरवाजे के दाहिने स्तंभ पर।

[1917]

॥ ओं ॥ संवत् १४६६ वर्षे चैत्र सुदि १३ सुविहित शिरोरत्न शेखर श्री रत्नशेखर सूरि पट्टांबुधि पूर्णचंद्र श्री पूर्णचंद्रसूरि गुरुक्रम कमलहंसाः श्री हेम हंससूरयः सपरिकरा करः...

सभामंडप के ३ मजले के स्तंभ पर।

[1918]

श्री जिनसागर सूरि उदयशील गणि आज्ञासागर गणि क्षेमसुंदर गणि मेरुप्रभ मुनि श्री......

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

## बाचन जिनायलमें पंचतीर्थीयों पर ।

[ 1919 ]

॥ सं० १२४ए......लषमिणी श्रेयोर्थं पुत्र उधरणेन जात्रि आसधर श्रेयोर्थं श्री पार्श्वनाथ बिंबं कारितं ॥

[ 1920 ]

ॐ संवत् १२६२ ज्येष्ठ सुदि १० शनौ वायट ज्ञातीय स्वसुर नायक आसल श्रेयोर्थं ......श्री श्रेयांस बिंबं कारितं । श्री नागेन्द्र गच्छे श्री वर्द्धमान सूरिभिः प्रतिष्ठितं ।

[ 1921 ]

संवत् १३२१ वर्षे फागुण सु०.... भा० घाटी पु० ऊदा भा० रुपिणि सुत आसपालेण माता पिता पूर्वज श्रेयोर्थं चतुर्विंशति पट्टः कारितः श्री चैत्रगच्छीय श्री आमदेव सूरिभिः श्री शांतिनाथ ......।

[ 1922 ]

सं० १३५५ श्री ब्रह्माण गच्छे श्रीमाल ज्ञातीय रिज पूर्वज श्रेयसे सुत मालाकेन श्री आदिनाथ बिंबं प्र० श्री विमल सूरिभिः ।

[ 1923 ]

सं० १३५६ श्री शांतिनाथ बिंबं कारितं श्री कक्क सूरिभिः प्रतिष्ठितं ।

[ 1924 ]

सं० १३७१ वर्षे ज्येष्ठ वदि ७ प्राग्वाट ज्ञातीय सा० धीना भार्या देवलं पुत्र चरूजा केन मातृ पितृ श्रेयोर्थं श्री पार्श्वनाथ बिंबं श्री पूर्णिमा गच्छे श्री सोमतिलक सूरि उपदेशेन बिंबं का० प्रतिष्ठितं श्री सूरिभिः ॥

[ 1925 ]

सं० १३७३ वैशाख वदि ११ श्रे० सिरकुंआर भा० सींगार देव्या प्र० सा लू ...... श्री महावीर कारितं ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[1926]

संवत् १३९१ मा० सु० १५ खरतर गच्छीय श्री जिन कुशल सूरि शिष्यैः श्री जिन पद्म सूरिभिः श्री पार्श्वनाथ प्रतिमा प्रतिष्ठिता कारिता च मव० बाहि सुतेन रत्नसिंहेन पुत्र आल्हादि परिवृतेन स्वपितृ सर्व पितृव्य पुन्यार्थं ।

[1927]

सं० १४०० व० सु० ५ प्रा० रोस्तरा पदम । साहरू साकल श्रे० देवसीहेन का० प्रति० सिद्धान्तिक श्री माणचन्द्र सूरि ।

[1928]

सं० १४२२ व० ज्येठ सु० ११ बुधे......मंडलिक ज्ञा० रूल्हण दे सुत धाणाश्रेयोर्थं व्य० षानाकेन श्री संभवनाथ बिंबं का०...तपा गच्छे श्री रत्नशेखर सूरीणामुपदेशेन.....

[1929]

सं० १४३९ माह वदि ७ श्रीमाल ज्ञा० व्यव० राणासीह ज्ञा० ललती पुत्र वयरा केन श्री सुमतिनाथ बिंबं का० श्री विजयसेन सूरि पट्टे....

[1930]

सं० १४७१ वर्षे माघ सुदि ......श्री मुनिसुव्रत बिंबं का० प्र० कछोलीवाल गच्छे श्री संघतिलक सूरि....

[1931]

सं० १४०२ वर्षे....साहलेचा गोत्रे सा हांपा....ज्ञा० गयणल दे पुत्र सा० लींबा ज्ञा० वीरणी पुत्र षरहयेन पितृ मातृ श्रेयसे श्री श्रेयांस बिंबं का० प्र० श्री पल्लीकीय गच्छे श्री यशोदेव सूरिभिः ।

[1932]

ॐ सं० १४९१ वर्षे माघ सुदि ५ बुधे श्रीमाल वंशे वहगटा गोत्रे सा० ऊदा पुत्र सा० जगकेन आसा जूसा सहसादि पुत्रयुतेन पुन्यार्थं श्री नमिनाथ बिंबं कारितं प्रतिष्ठितं श्री खरतर गच्छे श्री जिनसागर सूरिभिः ।

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

[ 1933 ]

सं० १४९३ व० वै० सु० ५ श्री संडेर गच्छे पीपलउडेचा गोत्रे श्रे० जा० सा० कान्हा भा० वीमणि पु० रतनाकेन पित्रौ निमित्तं श्री शांतिनाथ बिंबं का० श्री जशोभद्र सूरि संताने श्री शालि .....।

[ 1934 ]

सं० १५०३ व० ज्ये० सु० ११ शु० श्री उप० ग० ककुदाचार्य सं० त्रिपड गो० सा० जीऊण पु० रामा भा० जीवदही पु० जिलाकेन पत्नीपुत्रस्वश्रे० श्री श्रेयांस बिं० का० ......।

[ 1935 ]

सं० १५०७ मा० व० १३ उकेश सं० मारंग सुत संभा भा० हेमा दाणा डुंगर नापा सं० रावा भा० पोतू सुत साहस जहाए भा० लक्ष्म्या श्री संभव बिंबं का० प्र० श्री उदयनंदि सूरिभिः।

[ 1936 ]

संवत् १५१३ वर्षे वैशाख सुदि २ सोमे उपकेश ज्ञा० कस्वाट गोत्रे। सा० धाना भा० ससमादे पुत्र सा चडसीडाकेन पितर बालू निमित्तं श्री सुमतिनाथ बिंबं का० प्र० उपकेश० कुल श्रावक ......।

[ 1937 ]

सं० १५१७ वर्षे चैत्र वदि १ शुक्रे श्रीश्रीमाल ज्ञा० ......सु० बडूआस पुत्र पौत्र सहितेन श्री अजितनाथ मु० जिवितस्वामि प्र० श्री पूर्णिमा पक्षे श्री राजतिलक सूरिणा-मुपदेशेन।

[ 1938 ]

सं० १५२५ वर्षे मार्ग० सु० ९ आगर वासि प्राग्वाट सा० वाघा भा० गाऊ पुत्र सा० माळाकेन भा० आल्हू पुत्र पर्वत सा० नाई प्रमुख कुटुंबयुतेन स्वश्रेयसे श्री शांतिनाथ बिंबं का० प्र० तपा श्री सोमसुंदर सूरि शिष्य श्री लक्ष्मीसागर सूरिभिः।

६०

CC-0. Jangamwadi Math Collection. Digitized by eGangotri

